तृतीयपादात्परमिति नतिते नेत्यक्षरत्नितयं अविशिष्टौ पञ्चाक्षरौ द्वौ पादौ आदितः पञ्चाक्षरास्त्रयः पादा इति पञ्चाक्षरा याः पञ्चपादाः प्रथमाः तत्राद्येषु त्रिषु पादेषु प्रवाह्वाद्यास्त्र्यक्षराः शक्वर्य्य इति च उपसर्गा इति चाख्यायन्ते एवमुत्तरयोरपि तथाच प्रत्यृचं त्रयस्त्रय उपसर्गा इति तृचेन भवतीति तैर्विरहिता इन्द्रं जुषस्वेत्याद्याः पञ्चविंशत्यक्षरा गायत्र्यो भवन्ति ते तैः सहिताश्चतुर्विंशदक्षरानुष्टुभो भवन्ति अत्र निदानकारः तस्यैता ऋचः पञ्चविंशत्यक्षरापञ्चपदाः पञ्चाक्षरपदाः नवोपसर्गाणि आदितस्त्रयाणां पादानां त्रीणि त्रीण्यक्षराणि विष्णोः पादान्ते तु भवन्ति तेऽष्टाक्षराः सम्पद्यन्ते ग्राक्षरावक्षरौ द्वयाक्षरावेकः ताश्चतुस्त्रिंशदक्षराः सम्पद्यन्त इत्यादिना इममर्थं बहुधा प्रपञ्चितवान् तत्र तत्र ताः प्रवाह्वाद्या उपसर्गास्ते प्रदर्श्यन्ते अथवा इत्यादिना अथेति पञ्चान्तरमापरिग्रहे इन्द्रं जुषस्वेत्यादीनां तिसृणां आदितस्त्रिभ्यः पञ्चाक्षरपादेभ्य ऊर्ड्ढं यानि प्रवहेत्यादीनि त्र्यक्षराणि एतास्त्र्यक्षरा एकपदा विष्णोश्छन्दसः विष्णुसम्बन्धिना छन्दसा भुरिजः शक्वर्य्यः भूरिकनामिकः शक्वरीविशेषः ॥ २२ ॥

एतासां प्रीशस्फलत्वमाह। ·

एताभिर्वा इन्द्रो वृत्रमहन् क्षिप्रं वा एताभिः पाप्मानं हन्ति क्षिप्रं वसीयान् भवति ॥ २३ ॥

एताभिः शक्वरीभिः खलु पुरा इन्द्रो वृत्रमसुरं हतवान् आभिर्हन्तुमशकद्धन्तुं तच्छक्वरीणां शक्वरीत्वमिति विज्ञायत इति निरुक्तं यस्मादेवं तस्मादेकपदाभिर्भूरिकशक्वरीभिः क्षिप्रं पाप्मानं हन्ति विनाशयति क्षिप्रं शीघ्रं वसीयान् वसुमत्तरः श्रेष्ठश्च भवति ॥ २३ ॥

अथैता एकपदाः इन्द्रं जुषस्वेत्याद्यासु संयुज्य स्तौति।

चतुस्त्रिंशदक्षराः संस्तुतो भवति त्रयस्त्रिंशद्देवताः प्रजापतिश्चतुस्त्रिंशो देवतानां प्रजा[illegible] मेवोपयन्त्यरिष्ट्यै ॥ २४ ॥

प्रत्यृचं प्रवक्षाद्यास्तिस्त्रस्तिस्त्र एक[illegible] संस्तुताः प्रत्यृचत्रवनवाक्षराणि सम्पद्यन्ते पञ्चाक्षरै[illegible]भिः पञ्चभिः पादैः पञ्चविंशत्यक्षराणि सम्पद्यन्ते ता [illegible]र्मिलित्वा प्रत्यृचं चतुस्त्रिंशदक्षराः संस्तुतः सह स्तुतः त्रि[illegible]तुस्त्रिंशदक्षरात्मकः समुदायो भवति त्रयस्त्रिंशद्धि त्रयस्त्रिंशत्संख्याका देवताः प्राप्नोति अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रश्च वषट्कारश्चेति त्रयस्त्रिंशद्देतासां देवतानां प्रजापतिश्चतुस्त्रिंशत् संख्यापूरको भवति चतुस्त्रिंशेनाक्षरेण चतुस्त्रिंशं प्रजापतिमेवोपयन्ति उपगच्छन्ति अरिष्ट्यै अहिंसायै ॥ २४ ॥

अथोक्तानुपां षोडशिस्तोत्रसमये हिरण्यधारणं विधत्ते।

